३,५; ५,४; ३, १,५[१];१०; २,
२; ११; ७, १६[१]; ९, ८; ९;
२६; ४, १,३[१]; ४,२;७; ५,८,
१; १२, १[१]; १३, १[१]; २; ३,
४[१];१४, ३; ४; ६, १, १; १३;
२, १२; गी १,६; २, २०; मै
जा[१]§[a]; २, ६; ७; ५, १[१]; ५[१];
८[१];मैत्रि२,६[१]; ४,५;६,१[१];५[१];
८[१]; ९[१]; ११; १३[१]; १९[१]; २१;
३३[१];३५; ७, १, ७; मैत्रे आठ
जा[१]§[a]; के १, ८; १५; जा ४[१];
गर्भ ३; ना १; मना २, १५§[b];
७२§[c];८०§[d]; अ १[१]; २[१]; अना
२६;३३[१];३५; आशि ६, ८§[e];
कौ १, ५; २, १; २[१]; ३; १२[४];
१३[४]; १४; ३, २[५]; ३[५];४[११];७;
९;४,११; नृपू४,१५,२७; सुबा
१§[f]; ४; मन्त्रि १२; ससा ६;
ते ६,३४; ध्या ४७; ५६; ६०;
प्रवि १४[१]§[b]; ६६; १योत ६५;
११९; नाप ३, ७७[२]; त्रिब्रा १,
१;२,५४;७९; ८३; ८४;११७;
११८; योचू जा[१]§[a]; ११; २३;
३०;१००; रार ५,४; रापू ४,
६१[l]; राउ ४,१२; शां १,४[४];१,
७,१२;महा जा[१]§[a];१,१; योशि
१,६०; ६१;६४; १०६; ११२;
१६२;६,३६;५३; पप४१८:९;
ए ३; भाव ४,४२;५,२५[१];२९;
३१;३२; सू १६;पाशु२,८; कठ
२०; यो १, १४; १९;४७;५०;
५२; आद जा[१]§[a]; ४, २३;२५;
४२;४३;४६;४७; ६,१७[l];३५;
१०, ४; १संन्या अव्य कुं सावि

हंसा आवा जा[१]§[a]; प्रा १,६;
४,१; पा १,१; वरा ५,५४;
सी २, १५; मु २, २, ५१; ह
११:३; पा ५, ६; लिं ३१०:
१५[१]; कालि ४०३: ८; गा ५;
चू १२; नृपू १, २; मसू १,१,
२३; २८; -अम् क २, २,३;
प्र १, ४; १३; २,४; ३,८;१०;
११;६,४; ते २,३,१[१];३,१,१;
३,१; जां १, २, २; ११,५[१];३,
१५, ३; ४; ४,३,३[१];१०,५;६,
८,२; ७,१५,१; बृ १,३,३;७;
१३;५,३;१४;३, ७, १६;४,४,
२; १८; मैत्रि ६, १९;२५; जा
४[१]; मना २, ४७§[k]; ७०§[l]; अ
३[१]; कौ २, ४; ५; १३[५]; १४[१];
१५[१]; ३,२;६; सुबा ९[१]; १५;
ध्या ६९; नाप ३, ७७[१]; त्रिब्रा
२,१३९;१४०; योचू ३०;४०;
९५;९८; त्रिशि ७,४८; शां १,
४; ७, १; १३; ४३; ४४; पै १,
२१;२, ९; योशि ६, ३५; ५३;
पप ४१८: ९; १२; यो १, २७;
३२;४४;५३[m];आद५,७;८;६,
२२; या १, १[१]; दत्ता १, ६;
२प्र ३२:१४;गी ४,२९;८,१०;
१३; -अस्य के १,२; प्र २,१३;
३, १२; जां १, ८, ४; बृ १,५,
१०;१३; ४,१,३[१];४,१८; मैत्रि
६, १३; कौ २, १[१];२; नृउ २,
९; ३; नाप ३, ४; ५, १; योशि
५, ३७; वरा ५, ५४; योसू १,
३४; -आः प्र ४,११; कुं २,१,
८[१]; ते १,५,३; जां ३, १२, ३;

४; १६,१-६; ५,१,६; ७; १५;
७,४,३; १०,१[१]; बृ १,२,६;५,
१७;२१; २,१,२०[१]; ९,३[१]; ३,
६; ५,१५; ३,२,११; ९,४; ४,
२,४[०]; ३,३८; ४,१;२; ६; ५,
१४,४; ६,१, ७; मैत्रि ६, १२;
३२; ३५; ३७; मना २, १२,
१[१]§[n];२,२९§[o];७९[१]§[p]; अ २;
आशि ३, ८; कौ १, ६; ३,२[०];
३[१]; ४,११; नृपू १, ८; नृउ
५,१-३; सुबा ३;४; आवो २०;
त्रिब्रा१,८; प्रा १,६[q]; कुपु २४;
पा ५,२; बृद्ध ३१५:८; गा १४;
भव १,३५; पिंग ६, ६; मसू २,
४,१; -आत् प्र ६,४; ते ३,३,१;
ऐ १,४; बृ १,५, २३; २,३,४;
३,७,१६;५,१२,१; जा ४; ध्या
६०; बउ ३, ४९; -आन् प्र १,
६[२]; ३,४; जां १,२,९;५,४;५,
१,१२; बृ २,१,१८; २,३[१]; ५,
१४,४[२]; ६,१, १३; ४, २४; श्वे
२,९; मैत्रि ६, ११; २६; हं ६;
मना २, ३८§[r]; अशि ४, १[s];
१५[t]; अ १[१];क्षु ५;९;प्रवि ७४;
ते ३,५३[u]; त्रिब्रा २,११;१०९;
योचू ९२; मुद्र ४; पै २,४८;३,
१;४,५;योशि ६,७;यो २,४५[v];
सुता १, २५; बृद्ध ३१५ : १६;
३१६ : ८; शि ७,२८; गा १५;
भव ३, २६; गी १, ३३; ४,
३०; -आनाम् प्र १,१०; जां ३,
१६, २; ४;६; ७, ४, २; बृ १,
५, २२; २, १, १७; मना २,
७४§[w]; कौ ३,२; भाव २,१२;

a) पाप्र ३,१५,२३ । b) तैआ १०,१४,१ । c) शौ १९,६०,१ । d) तैआ १०,६४,१ । e) शौ १०,२,२७ । f) सकृत् 'प्राणः' इति मव्या.संटि. । g) ऋ १०,९०,१३ । h) सकृत् 'तेजः(?जः)' इति मव्या. । i) =वकार-लोपाकार– । °जानः इति मिसा. वनि. स्तोभः इ. (तु. पाल., मव्या.) । j) प्राण° इति मव्या. संटि. । k) तैआ ३,७,७,२ । l) तैआ १०,३६,१ । m) °प्राण् इति मव्या. संटि. । n) तैआ १०,१०,१[१] । o) तैआ १०,३३,१ । p) तैआ १०,६३,१[१] । q) 'प्राणौ' इति पाल., मव्या. । r) तैआ १०,४८,१ । s) 'सर्वं शरीरम्' इति मव्या. । t) 'लोकान्' इति मव्या. । u) 'प्राणीत्' इति मव्या. । v) °प्राण् इति मव्या. संटि. । w) तैआ १०,३७,१ ।

५, २८![a]; ४३; दे २२; -णाय छां५,११,१§[b];७,१५,१; बृ ४, ३,३६;६,३,२; मैत्रि ६,९; मना २,६९§[c];कौ२,१;२;प्रा१,६; -णे क २,३,२; प्र २,६; ते ३,७,१; छां ५, १९,२; ६, ८,६; १५,१; २; ७, १५,१; बृ १, ३,३[d]; ५, २३; ३,७,१६; ९,२६; ५,१२, १; १३,२;३; १४,४; श्वे २,९; मैत्रि ६, ३७; ७,११; मना २, ६९[e]§[c];७०§[f];७१§[g]; कौ २,५; १३;१४;३,४:९; सुबा५[h]; नाप ३,२७; शां १,७, ३०; ३१; यो १,१०; जाद ८,२; प्रा १,६[i]; मु २,२,५२; भव ३,२६; ब्रसू ४,२,३; गी ४,२९; -णेन के १, ८; क २,१,७;२,५; ते ३,३,१; ऐ ३,४[j];११; छां १,२,६;५,१, ८-११; ७,१५,१; बृ १,३,२३; २४;३,१,५;४,१;४,३,१२;६, १,८-१२;कौ १,७;२,८;९[j];३, २;४[b]; ६[b]; सुबा ४; शां १,४; योशि १,५९;२,११;३,५; वरा ५,४४; इ ११: २; -णेभ्यः मैत्रि ६, ३७; कौ १,६; ३, ३[k]; ४, १९; -णेषु छां २,७,१; २;११, १;२; ४,३,४; बृ १,२,६;४,३, ७; जा १; राउ १,१; ता १,१; गी ४,३०; -णैः प्र २,७; मुं २, १,५;३,१,९; बृ १,५,१७; ५, ५,२; मना२,७९[e]§[f]; अना ३३; कौ १,२; नाद १२; १४.

प्राण-कर्मन्- -र्म शां १,४; जाद ४,३०; -र्माणि मैत्रि ६,१०; गी ४, २७.

प्राण-कोश-विवर्जित- -तः ते ४, ७४.

प्राण-ग्रन्थ-समीप-स्थ- -स्थम् अज ५,३०.

प्राण-गति- -तेः ब्रसू ३,१,३.

प्राण-चेतस्- -तसी अज५,५२.

प्राण-जय- -यः योशि १,६६; -यम् योशि १,८०.

प्राणजयो(य-उ)पाय- -यः शां १,७,४३.

प्राण-तन्मात्र-विषय- -याः त्रिब्रा १, ६.

प्राण-त्व- -त्वम् सांनू ५,११३.

प्राण-देवता- -ताः ब्र १.

प्राण-धारण- -णात् अना ७[i].

प्राण-धारि(न्>)णी- -णी योचू ३५.

प्राण-निरोधन- -नम् अज ४, ८५.

प्राण-परिस्पन्द- -न्दः अज ४, ४१; मु २,२,४८.

प्राण-पवन-स्पन्द- -न्दः अज ४,८९.

प्राण-प्रतिष्ठा- -ष्ठायाम् दे २२.

प्राण-बन्धन- -नम् छां ६,८,२.

प्राण-बीज- -जम् ध्या ९५.

प्राण-भृत्- -भृत् बृ १,५,१४; ३,१,७; ब्रसू १,३,४; -भृतः बृ १,५, १४; -भृताम् त्रिब्रा २, ११८.

प्राण-मनस्- -नसोः मैत्रि ६, २५.

प्राण-मय- -यः ते २,२,१; बृ १,५,३;४,४,५; सुबा ५; ससा १,१३; कठ १८; -यम् ते २,८, ५;३,१०,५; -यात् ते २,३,१; -येन कठ १९.

प्राणमय-कोश- -शः पै २, २१.

प्राण-मार्ग- -र्गः ध्या ५६; -र्गे योचू २१.

प्राण-मुख्य-

प्राणमुख्य-त्व- -त्वेन भा १८.

प्राण-यात्रा-

प्राणयात्रा-निमित्त- -त्तम् नाप ५,८.

प्राणयात्रिक-

प्राणयात्रिक-मात्र- -त्रः नाप ५,६.

प्राण-युक्त- -क्तः नाप ३,२७.

प्राण-योग- -गेन त्रिब्रा १,९.

प्राण-रूप-

प्राणरूपिन्- -पिणः गृ १७.

प्राण-रोध- -धः अज ५,५१; मी २,२; -धम् गो१,८;११; -धे शां १,७,३.

प्राण-रोधन- -नम् अज ४,४४.

प्राण-लिङ्ग- -ङ्गम् शिधि ३८१: ११.

प्राणलिङ्गिन्- -ङ्गिनाम् ह १६[i]; -ङ्गी ह १४[i];१५[i],१७[i]; १८.

प्राण-वत्- -वता ब्रसू २,४,१५; -वान् मैत्रि ६,११.

प्राणवती- -ती मै ५,५; मैत्रि ६, ५; -त्यः अव १३.

प्राणवत्-त्व- -त्वात् ह २४.

प्राण-वर्ग- -र्गः अव २,९.

प्राण-वायु- -यवः योशि ६,११; -युः अना ३७[k]; त्रिब्रा २,११७; -युना १भा १८.

प्राण-वाहि(न्>)नी- -न्यः ध्या ५२; ५४; योचू १६; २२.

प्राण-विद्- -विदः मी २,३०.

प्राण-विद्या- -द्या योचू ३५.

प्राण-विपत्ति- -त्तौ योशि१,३०.

a) °णाञ्च° इति निसा. यनि. शोधः द्र. । b) मा २२, ३३ । c) तैआ १०, ३३, १ । d) 'प्राणयोगः' इति निसा. । e) तैआ १०, ३३, १[2] । f) तैआ १०, ३६, १ । g ) तैआ १०, ६३, ४ । h) 'प्राणेन' इति अज्ञा. संटि. । i) तैआ १०,६३,१[2] । j) °णविमहात्स्व इति आन. । k) °णः णा° इति आन. ।

प्रा(प्र-अ)णित्वा[a] १संन्या १,१[b].
[c]प्राणपीतेयम्[c] अहि २७.
प्रातर्[a d](>:) छां १,१०,६; १२, १; ५,३,६;११,५;७; ६,१२,१; बृ १,५,१४; ६,३,६; मा ५; मना २, ७९१§[e]; बृजा ३, ५; १योत ४३; त्रिगा २,१०१; शां १, ७, २; अप १६[2]; त्रिता ४, १४.
प्रातः-काल- -के १मंन्या २,६७.
प्रातर्-अनुवाक[12]- -कः आग २३: १०; २४:१२: -कस्य छां २,२४, १; -के छां ४,१६,२;४.
प्रातर्-मध्याह्न- -ह्नयोः गार ४०८: १४.
प्रातर्-मध्याह्न-तृतीय-सवना-(न—आत्मक>)त्मिका- -का गार ४०७ : २.
प्रातस्-त्रिप्रादिवर्ण-सूर्य-
प्रातस्त्रिप्रादिवर्णसूर्य-चन्द्र-वह्निज्वालावली-
प्रातस्त्रिप्रादिवर्णसूर्यचन्द्र-वह्निज्वालावली-वत् मं १,२,११
प्रातस्—त्रिप्रादिवर्णा(र्ण-अ)-क्षण—सूर्य-चन्द्र—
प्रातस्त्रिप्रादिवर्णाक्षणसूर्य-चन्द्र-वत् अता ७.
प्रातः-संध्या[12]- -ध्याम् नाप४,३८.
प्रातः-सवन[12]- -नम् छां २, २४,१; ६; ३, १६, १[2];२; काला १३; आथा२२; शौ ५२:४;११; -नेषु शौ ५१ : २.
प्रातः-सूर्य-सम—प्र(भ>)भा- -भाम् दे १५.
प्रातः-स्नान[12]-
प्रातःस्नानो(न-उ)पवासा-
(स—आ)दि—काय-क्लेश- -शान् १योत ४८.
प्रातर्दन- प्र√तृद् द्र.
प्रातिपदिक- प्रति-पद- द्र.
प्रातिभ- प्रति√भा द्र.
प्रातिभासिक- प्रति√भास् द्र.
प्रातिलोम्य- १प्रतिलोम- द्र.
प्रातृद्- प्र√तृद् द्र.
प्रात्यहिक- प्रत्यह- द्र.
प्राथमिक- प्रथम- द्र.
प्रादक्षिण्य- प्रदक्षिण- द्र.
प्रादुस्(>र्,ष्)[d]
प्रादुर(र्√अ)स(भुवि), प्रादुरासीत् अज १,९.
प्रादुर्√भू, प्रादुर्भवन्ति शा १८; प्रादुर्भवतु अज १,११.
प्रादुर्बभूव के ३,२; छां १,१२, २; २प्र ३३ : ९; प्रादुर्बभूवुः २प्र ३३ : १०; वपू १,५; प्रादुर्भविष्यन्ति मुप्र २; प्रादुरभूत् अव्य ६; वरा १,१.
प्रादुर्-भाव- -वः त्रिवि ५, २; भव १,११.
प्रादुर्-भूत,ता- -तः महा ३,३; -ता पिंप्र २,८; -तेषु गोपू २५[f].
प्रादुष्√कृ, प्रादुरकार्षम् गोपू २५.
प्रादेश- प्रदेश- द्र.
प्राधान्य- प्र√धा द्र.
प्राध्वंसन- प्र√ध्वंस् द्र.
प्रा(प्र-अ)न्त- -न्ते सुमु १६.
प्रान्त-भूमि- -मौ योसू २, २७[g].
प्रा(प्र-अ)न्तर- -रम् शि ६,२१५.
प्रा(प्र√आ)प्>आपि, प्रापति छां ४, ९, ३[h].
प्राप्नोति बृ १, ४, १७; मं ३, १,३; अता ५; अव्य ४; त्रिता १, ४; मु १, १, १५; नाउ ३, १०-१२; राधा १, २९; सार २२२:१; वि १९; प्र⋯आप्नोति बृ५,१३,४; प्राप्नुवन्ति छां ७,६, १; मना २,३८-४०§[i]; रापू ४,६६; गाउ ३,७; भ २,१५; सू २०; इ १८ : १०; सार २२२ : ४; गी १२,४; प्राप्नोषि महा ४, ६०; प्राप्नुयात् ते ३,१०,१; अव्य ७; अक्षि २८; प्रा ४,१[2]; शि ६,२२; गी १८,७१; प्राप्नुयाम् बृ ६,३,१.
प्राप छां ४,९,१; त्रिवि ५,१२[j]; महा २,२०; प्राप्स्यति त्रिवि ८, २१; प्राप्स्यसि त्रिवि ८, १५; गी २,३७; १८,६२; प्राप्स्ये गी १६, १३; प्राप्स्यामि अज ५, ५८; प्रापत् बृ ५,१४,७; ६,४, २८; कौ १, ३१[k]; प्रापम् बृ ५, १४,७; गा २४.
प्राप्यते क १,२,१०; मै ४,३[2]; मैत्रि ४,३[2]; मैत्रे १,४,२[2]; ध्या ८९; योचू ६२; योशि १,१३९; १४४; अज १,५१; ४, ७३; भव १, ३३; ४९; गी ५, ५; प्राप्येते वि २९; प्राप्यन्ते भ २, १४; भव १,६.
प्रापयति मैत्रि २,६; आग २५: ४; प्रापयन्ति सार २५६ : १६; प्रापय छां ४,५,१; प्रापयेत् आग २५ : ४§[l].
प्रा(प्र-आ)पक- -कः वपू १,४.
प्रा(प्र-आ)पण-
प्रापणीय,या- -यम् १अव २२; -या शि ६,१७१.

a) पा ७, १, १८ । b) 'हुत्वा' इति निसा. संटि., 'हुनीत्वा' इति मऋा. । c) पा.? । d) =अव्य. । वैप१ द्र. । e) पा.? [तु. तैआ १०,६३,१ (तु. सस्थ. टि. साव-> -वम्)] । f) 'प्रादुरभूवन्' इति निसा., 'प्रादुरभूत' इति पाठ. । g) °मिः इत्यपि पाभे. । h) 'प्रापयति' इति निसा., 'प्रापत्' इति पाठ. संटि. । i) तैआ १०, ४८-५०,१ । j) 'प्राप्य' इति निसा. । k) निसा. मऋा. च मुपां. यनि. लु-लोपौ (तु. JC.) । l) चतुर्थ्यर्थे प्रथमा(?) सुपां. यनि. लु-लोपः (तु. पै., अत्रैव 'प्रापयति' इति च) ।

प्रा(प्र-आ)पयित्वा[a] पै ३,१.
प्रा(प्र-आ)पित- -तः बृ ४,४,२३.
प्रा(प्र-आ)प्त,प्ता- -प्तः बृ ४, २, ४; नाप ६,२८; महा ४, ६; अग्नि ९; सार २२६:१६; २२७:१५; २५८: २;२७८: १८; २७९: १२; गी१८,५०; -प्तम् गी२,३; ते ३,५५; नाप ७; महा २,७२; ४,१७; ५, ४१; श्योत १, ७; तुअ १४; अव २, २१; १अव २२; सार २२६: १५; १७; २२७:५; २३०: २;२४३: ५; २४९: २;२५७: ११; २८८: २३; मव ४,१४; -प्तम्-प्तम् महा ५, १००; -प्तस्य श्वे २,१२; -प्ता सार २२०: १७; २५७: ६; २८५: १६; २३; २८६: १७; -प्ताः छां ४, ५, १; ते १, ४५; प्रवि २५; महा ५, ६०; गोउ २४; २प्र ३६: ८; सार २२१: २३; २२४: १०; २४०: ११; १२;१३;२४१:४;२४२: १७; २४३:४;२४६:२२;२४८:१४; २०;२५०:२३;२५५:११;१३; २७३: १३; २८०: ३[1];५; वपं ३१२: २०; -प्तान् नाप ३,२५; -प्ताम् शि ६, १७२; -प्ताय छां ५,३,६; -प्ते प्या १०-१२; नाप ५,१८;त्रिमा२,१५; योचू११५; पै ४,९; महा २,१२; यो २,३०; शि ४, ५४; सांका ६८; -प्तेभ्यः छां ५,११,५;-प्तौ सार२८९:८.
प्राप्त-कर्म-कर- -रः महा६,६४.
प्राप्त-प्राप्य-
प्राप्तप्राप्य-ता- -ता १अव २६.
प्राप्त-वस्तु-प्राप्त- -प्तम् सार २७९: १.
प्राप्त-वि(वा>)प- -पः महा ३, १.
प्राप्त-विवेक- -कस्य सांसू१,८३.
प्राप्त-शरीर-संयोग- -गम् सला १, २०[b].
प्राप्त-सचाक- -कःमहा[c]५,१०९.
प्राप्त-हर्ष- -र्षः नाप ७, १[c].
प्राप्ता(प्त-आ)खिल-मनोरथ- -थः महा २,२९.
प्राप्ता(प्त-आ)नन्द- -न्दः मं २, ५, ४.
प्राप्ता(प्त-आ)नुत्तम-विश्रान्ति- -न्तिः महा २,४७; अव २,२६.
प्राप्ता(प्त-अ)र्थ-प्रकाश—किङ्क- -ङ्कात् सांसू ५,१०६
प्राप्तो(प्त-उ)न्मत्त(नी-अ)व-(स्था>)स्थ- -स्थः मं ३,२,१.
प्रा(प्र-आ)प्तवत्- -वन्तः सार२४९: १; २५७: ४; २७९:३; ६;७; २८०:७;१२; २८२:१६; -वान् क१,२,१०;अव१,२;३,१;१६.
प्राप्तवती- -ती सार २८५:११[2].
प्रा(प्र-आ)प्तव्य- -व्यम् महा २,७२; १अव २९.
प्रा(प्र-आ)प्ति- -प्तिः नृउ ५,२; प्या ९३, १३; १५; सी ४; सार २३६: ५; २४१: ६; २५०: १५; १८; शि ५, ४०[2]; -प्तिम् श्वे ३,१२; -प्तेः सार २२६:२३.
प्राप्ति-व्यायाम-योग- -गः मव १, ११.
प्राप्ति-सिद्धि[e]- -द्धिः आथ ३९३: ९; ३९९: ९.
प्रा(प्र-आ)प्नुवन् क २, ३, १२; कठ ३३; म २,१४; शि ५,१९.
प्रा(प्र-आ)प्नुवत्- -वन् सार २९१: ८; -वन्तः सार २९१: २१.
प्रा(प्र-आ)प्य क १,३,१४; २,३,६; प्र ६,५[1]; मुं ३, २,५; छां ६,४, ७;८,६; बृ ४,४,६; ६,२,१६[1]; गौ ४,८५; कौ २,१४; शु १; प्रवि ४६; नाप १; ४,१८;५,१; ६,१;२७; त्रिवि ५,१३;१४,६, १७; २०;२१[1];२५[1]; ७,१[1];८, १३;१७; शां १,५; पै १,६; २, १९; महा ४, १०३; योशि १, ११८: तुअ ६; अव २, १४; अग्नि १९; कुं २२; यो ३,१७; वरा २,५; मु १,२,६; इ १०: ३; सार २४०: १३; शि १,३०; त्रिशि ३८१:४; ह ४; रा ४२३: १८; गी २,५७;७२;५,२०[1];६, ४१; ८,२१;२५; ९,३३.
प्रा(प्र-आ)प्य- -प्यः १संन्या २,१५; -प्यम् महा ३, ०२[d]; योशि १, ११९; वरा २,२४.
प्रापश्चिक- प्र√पञ्च् द्र.
प्राभूत- प्र√भू द्र.
प्रामाण्य- प्र√मा(मान) द्र.
प्राय[°]- -येण नाप ४,२९; मव १,११.
प्राय-सत्र(>:) सांसू ३,७.
प्रायण- १प्रे द्र.
प्रायस्(>:)[°] सर ३,१०;शि७,१२१; मव १, १७;५५.
प्रायस्-चित्त[f]- -त्तम् नाप४,६; तुअ ७१: ११.
प्रायस्-चित्ति[f]- -त्तयः प्रा २, १[g].
प्रा(प्र√°अ)र्>अर्पि, प्रार्पयत् २प्र ३६: ११६[h].
प्रा(प्र-आ)√रभ्,प्रारभते गी१८,१५.
प्रा-रब्ध[e]- -ब्धम् सार २१;२२[1]; २३; २९; अध्या ५९; ५६[1]; ५८;५९; -ब्धे सार २९; मु १, १, ४१.
प्रारब्ध-कर्म-वर्जित- -तम् पै ४, ४.

a) पा ७, १, ३८ । b) °प्तशरीरसंयोगम् इति पाठः । c) °प्ति° इति जर्मा. । d) 'प्राप्य' इति जर्मा. संदि. । e) व्यु.? । f) वैतु. पाग ६,१,१५७ <प्राय- इति । g) °त्तिः इति पाठः । h) मा १,१ ।

प्रारब्ध-कथना- -ना अध्या ५५; ५७.

प्रारब्ध-क्षय- -यात् मु १,२,६; २,१,१.

प्रारब्धक्षय-पर्यन्त- -न्तम् मु १,१,४२.

प्रारब्ध-नाश- -शात् वरा २, ६१.

प्रारब्ध-प्रतिभास-नाश—पर्यन्त- -न्तम् नाप ७.

प्रारब्ध-संचिता(त-आ)गामि-कर्म-साधर्म्य—दर्शन- -नात् वस् १८.

प्रारब्धा(ब्ध-आ)गाम्य(मि-अ)-र्जित- -तानि वरा १,१२.

प्रारब्धा(ब्ध-अ)न्त- -न्ते वरा २, ७१[a].

प्रारब्धा(ब्ध-अ)वस्थिति- -तिः नाद २८.

प्रा-रम्भ- -म्भः सार २२७ : ३.

प्रा(प्र√अ)र्थ्,>अर्थि,प्रार्थयते भव १, ४२; प्रार्थयन्ते क२,१,२; भि३; ५;७;९; आश्र २[४]; ३[४];४[१]; गी ९, २०; प्रार्थयन्ति १योत ७८; प्रार्थये सर ३,२; प्रार्थयामः सार २३२ : ३; प्रार्थयस्व क १, १, २५; प्रार्थय सार २६१ : १९; प्रार्थयत सार २४८ : १२; प्रार्थयेत् ऊ ६३ : ९.

प्रा(प्र-अ)र्थन- -नम् गोच ६६:६.

प्रा(प्र-अ)र्थना- -नया महा ६,५१; -ना ते ६,२३; -नाः पाशु१,२०.

°प्रार्थना-

°प्रार्थनाम(मु√अ)स्(भुवि), प्रार्थनामास सार २८५ : २३.

प्रा(प्र-अ)र्थयित्वा[b] शि ७,२७.

प्रा(प्र-अ)र्थित- -तः नाप २; सार २३२ : ४; २४१ : ११; १५; २४२:१०; -तम् १संन्या२,६७.

प्रा(प्र-अ)र्थ्ये त्रिता २,७१.

प्रा(प्र-अ)र्थ्यमान- -नः श १५.

प्रा(प्र-आ)√विश्, प्राविशानि मे २, ६[c].

प्रा(प्र-आ)√वृ(आच्छादने)

प्रा-वरण- -णम् बृ ४,२,३.

प्रा-वृत- -तम् शि ७,१८.

प्रावृत-शिरस्- -राः शि ७,६०.

प्रा-वृत्य शि ७,६०.

प्रावृष्- प्र√वृष द्र.

प्रा(प्र√अ)श्(भोजने), >आशि,प्राश्नाति बृ ६,४,१९; ह १३:३१[d]; प्राश्नीयात् आरु३; जा४;नाप३, ७७; १संन्या १, १; पप ४१८ : १५; कठ १; कश्रु १, १; २,३. प्राशयति बृ ६,४,२५; प्राशयेत् बृजा ३,४.

प्रा(प्र-आ)शयित्वा[b] सिशि ३८३:७.

प्रा(प्र-अ)श्य बृ ६, ४, १९; जा ५; नाप ४, ३८[२]; पप ४१८ : २२; या २,१.

प्राश्- √प्रच्छ् द्र.

प्राश्नी- ३प्रश्न- द्र.

प्रा(प्र√अ)स्(भुवि), प्र···अस्तु नापू ४,७§[e].

प्रा(प्र√अ)स्(क्षेपणे)

प्रा(प्र-अ)स्त,स्ता- -स्तः बृ २,४, १२; -स्ता मैत्रि ६,३७.

प्रासाद- प्र√सद् द्र.

प्रा(प्र-आ)√स्था>तिष्ठ्, प्रातिष्ठते प्र ३,१;५[f]; प्रातिष्ठन्ते प्र २,४[11].

प्रा(प्र√आ)ह्,प्राह मुं १,१,१;२; मुद्र १.१; राउ ३,२; वरा २,१; शि ७,११२; गी ४,१; प्राहुः गी २, २७;बृजा २,१०; पै३,१;१संन्या २,७०; अध्या ३८; यो १,४२; ६४; रुजा २,१३; सिशि ३८१: १६; भव २,०;१३; पिंग ४,९; १०; गी ६,२; १३,१; १५, १; १८,२;३.

प्रियङ्गु[g]-

प्रियङ्गु-बिल्व-वैपल्य-नालिकेर-समुद्भव- -वम् शि ४,५९.

प्रियाल[h]- -लम् शि ६,१६.

√प्री,>प्रीणि[i], §[j]पिप्रयस्व मना २, १: व ४६१ : १७?[k].

प्रीयते रुजा २,२;४; पिंग ३,३; प्रीयन्ते रुजा २, ११; प्रीयताम् मृ १२.

प्रीणाति मना २,७१§[l]; प्रीणातु मैत्रि ६, ९; आच ६; ७[२]; ८; प्रीणन्तु आच १०.

प्रीणयति सार २२९ : २३.

प्रिय,या- -यः बृ २,४, ५[२]; ४, ५, ६[२]; कौ २,४[२]; ते ४, ३६; गोउ ३८; मु २,२,५४; सार २२६ : ८; काम २; अद्वैभा १५; गी ७, १७[२];९,२९;११,४४;१२,१४; १७;१९;१७,७;१८,६५; -यम् ते १,११,१;२,५,१; छा ५,१२-१७,२[२]; बृ १,४,८[५];१०;२,४, ४; ५[६]; ४,१,३;५,५;६[६]; मना १,४§[m];कौ३,१;ते३,५;४,२२; १योत १०८; १अव ३; आद २, ६; गोउ ६०[n]; सर ३, २३; व १२; ह१०:२०;सि६,१७८;७, ७९; व४६०:२२§[o]; नी५,१०; -यया बृ ४,३,२१; -या बृ २,४, ४;५[२]; ४, ५,५;६[२]; कौ १, ३;

a) आर° इति अध्या. । b) पा ७, १, ३८ । c) 'विविशानि' इति मैत्रि २, ६ । d) तु. सस्थ. टि. अनूष->-षः । e) ऋ ७,१००, ३ । f) प्रति° इति निसा. । g) व्यु.? =ओषधिविशेष- । h) व्यु.?=फलविशेष- । i) पाथा ७,३,३७ । j) ऋ ८, ११,१० । k) पिप्रि° इति पा.? यनि. शोधः द्र. (तु. नापू.) । l) तैआ १०, ३८, १ । m) मा ३२,११ । n) °यः इति आन. । o) ऋ १०,८४,५ ।

-याः बृ२,४,५[१];४,५,६[१०];कौ१,४;मना२,५२§[a]; २शिसं२८§[a]; गी १२,२०; -याणि क १,२,१; बृ २,४,५[२],४,५,६[२]; -याम् मुं १,२,६; -यायाः गी११, ४४[b]; -०ये तुल ७०:१५; ७१ : १२; सार २७६ : ९; गु २१; २८; -येण वि ६; -येषु नाप ३,५१; -यैः भव १,४.

प्रेयस्°– -यः क १, २,१[२]; २[२]; बृ १, ४, ८[३]; वरा २, ७; -यसः क १,२,२.

प्रेष्ठ°– -०ष्ठ क १,२,९; -ष्ठः गोउ १२[d]; -ष्ठाः मना २,६७§[e].

प्रिय-कृत्–

प्रियकृत्-तम– -मः गी १८, ६९.

प्रिय-चिकीर्षु– -र्षवः गी १,२३.

प्रिय-तम– -मः नृउ २,३.

प्रिय-तर– -रः गोउ ३२; गी १८,६९.

प्रिय-ता– -ता बृ ४,१,३; -ताम् भव ४,१७.

प्रिय-त्व–

प्रियत्व-जनन-वर्धन-परिणाम-क्षय-नाश– -शाः मुद्र ४१[f].

प्रिय-दर्शन,ना– -०न अक्ष ५; -नाः शि ४,२६.

प्रिय-पति– -तिः वउ २,७.

प्रिय-मेध– -§[g]धाः मना २,७३; चा २०.

प्रिय-रूप– -पाब् क १,२,३.

प्रिय-शिरस्–

प्रियशिरस्-त्व–

प्रियशिरस्त्वा(त्व-आ)व-(दि-अ)वाप्ति– -प्तिःअसु ३,१,१२

प्रिय-हित– -तम् गी १७, १५.

प्रिया(य-आ)त्मन्– -त्मा नृप ८५ : २.

प्रिया(य-अ)प्रिय– -ययोः, -याभ्याम् छां ८, १२,१; -ये छां ८,१२,१; नाप४,५; १आ १५; -येषु शां १,१.

प्रीणन– -नाय सार २२३ : १३; २२४ : १.

प्रीत,ता– -तः मैत्रि ६, ९; नृपू ४, १४;१६; राउ ४, १;५,१; अव्य ३; अक्ष १,१८; जाद ६, १७; ता ३,१; व ४३४:५; -ता त्रिता २, ७२; काम २२; -ताः त्र २, ४; रुद्द ३; रुजा २,१०.

प्रीत-मनस्– -नाः गी ११,४९.

प्रीता(त-आ)त्मन्– -त्मा ते ४, ६३.

प्रीति– -तिः जाद २, ५; रापू ४, ६०[b]; नापू ५,३[i]; सार २३१: ७; २५९ : १०; २७९ : २; २८६ : ३; २८७ : २२; २८८: ११; क २७; तारा ८३ : २४; गी १, ३६; -तिम् सार २५६ : १७; -त्या शु ३, २२; योशि १, १२९; ६,६७; सार २८८:११; भव ५, १७; -त्यै भव २, ६०.

प्रीति-कर– -रम् वा ३; गोच ६५:३; भव १,२९.

प्रीति-पूर्वक– -कम्[j] गी १०,१०.

प्रीति-भरत्– -मान् नाप ३,४८; ४,२८.

प्रीत्य(ति-अ)प्रीति-विषाद-(द-आ)त्मक– -काः सांका १२.

प्रीत्य(ति-अ)प्रीति-विषाद-(द-आ)द्य– -द्यैः सांसू १,१२७.

प्रीयमाण,णा– -णः क १, १, ११, -णा सार २६४ : २१; -णाय गी १०,१; -णेषु पिंम ३,१.

प्रेमन्°– -म्णः सार २२९ : ११; -म्णा सार २४० : ७.

प्रेम-प्रेक्ष(या>)या[i]– -या सार २८२ : ९.

प्रेम-भजन– -ने सार २५४:१०

प्रेमभजन-रू(प>)पा– -पाः सार २५४ : ९.

प्रेम-मग्न– -ग्नाः सार २५६ : १

प्रेम-मार्ग–

प्रेममार्गिन्– -र्गिणः सार २७८ : २३.

प्रेम-योग– -गः सार २८२:१९.

प्रेम-लक्षणक–

प्रेमलक्षणका(क-आ)ख्या-(?शा[k])-प्रतीक्षा– -क्षा(?क्षा:[k]) सार २८३ : ११.

प्रेम-व(त>)ती[l]– -ती सार २३४:४;२६२ : २१;२६६:१; २६८ : १७; -त्या सार २६८ : १६.

प्रेमवत्या(ती-आ)दि– -दयः सार २२७ : २; २२९ : ११; २३९ : ७; २६२:८; २७०:७.

प्रेम-संवलि(त>)ता– -ता सार २७२ : ४.

प्रेम-संपत्ति– -त्तिः सार २८२: २०.

प्रेमा(म-आ)विष्ट– -ष्टम् सार २२७:११;-ष्टेन सार२२७:८.

१प्रेमा(म-आ)नन्द[i]– -न्दम् सार २४९ : ७; २८६ : ४.

प्रेमानन्द-युत– -तम् सार २५३ : १९.

a) ऋ १, ११४, ७। b) उत्तरेण संधिरार्षः द्र.। 'प्रियत्व' इति SCHR. पाभे. [वैतु. वे. (NIA २, २३१)]। c) वैप१ श्र.। d) 'पुष्ट:' इति ज्ञान.। e) तैआआ १०,६७। f) °नाशज° इति निसा. यनि. शोधः द्र. [तु. अध्या., अस्तित्वज° इति अध्या. संटि. (तु. या १,२)]। g) ऋ १०, ७३, ९१। h) =भकार-बीजाक्षर-। i) =कलाविशेष-। j) वा. किवि. द्र.। k) पा.? यनि. शोधः द्र.। l) कस.।

फल-पुष्प-मणि-लता[a]–
 फलपुष्पमणिलता–हरितपी-
तवेतसुवर्ण-भ्रमर–संवलित–
शोभित[b]– -तानि सार २६२:१४
फल-भाग–
 फलभागिन्–
 √फलभागीय, फल-
भागीयते रया २१?[c].
फल-भोगिन्– -गिनः गर्भ ४[d];
-गी १भा १३.
फल-मुक्ति-प्रदायक– -कम् गर्भ
४[e].
फल-मूल-पुष्प-वारि[a]– -रिभिः
शां १, ५.
फल-मूलो(ल-उ)दका(क-अ)-
भिवत– -तम् शां १, ५.
फल-रस-त्वक्-पत्र-मूलो(ल-उ)-
दक[a]– -कैः नाप ४,१८.
फल-विप्रुदा(द-अ)क्त–
 फलविप्रुदाक्तिन्– -क्ती कुं ६.
फल-श्रुति– -तेः प्रसू ३,४,४४.
फल-संपत्ति– -त्तिः सांसू ५,२.
फल-संप्राप्ति– -प्तिः भव १,४५.
फल-सिद्धि– -द्धिः गी ४,१८.
फल-हेतु– -तवः गी २,४९.
फला(ल-आ)काङ्क्षिन्– -ङ्क्षी गी
१८, १४.
फला(ल-अ)धिक– -कः राउ ५,४
फला(ल-अ)न्-अभिलाष– -षः
मं १, १, ४.
फला(ल-अ)फल[a]– -ले महा २,
४९.
फला(ल-अ)भिसंधान– -नम्
नि २६.
फला(ल-अ)र्थ–
 फलार्थिन्– -र्थिना शि६,४३

फला(ल-अ)र्थ–
 फलार्थ-क– -कम् शि ६,
२६६.
फला(ल-आ)गम– -मः सांसू
१,१०६.
फला(ल-आ)वेश– -शेन मार
२२९ : ३.
फला(ल-आ)हार– -रः नाप ५,१
 फलाहारिन्– -री नाप ५,१;
१मंन्या २,१३,
फलित,ता– -तम् १अव ३१;
-ताः सार २७६ : १८; -तानि
मृ ८.
फलिन्–[f] -लिभिः आर्ष ७:७.
 फलिनी– -नीः प्रा १, २६[f].
फलो(ल-उ)दय– -यः अध्या ४९.
फलो(ल-उ)पभोग– -गः सांसू
१, १०५.
१-?फल– √फल् द्र.
फलक[g]– -के अध्य ६; शि६,१२१.
३फ(ल>)ला[h]– -लाम् शां १,७,४३१[i]
फाणित– √फण् द्र.
फाल[j]– -लम् बृजा ५,१६.
 फालो(ल-ऊ)र्ध्वग–ललाट-
 विशेष–मण्डक– -के अता ५.
फूत्[k]
 फूत्-कार–
 फूत्कार-शब्द– -ब्दः मं १, २,
७; अता ५.
फेन[l]– -नम् अशि ६,१४; त्रिप्रा २,
१४; बटु ३१७:२१; मार ४०५:
५; -नात् अशि ६, १४; बटु
३१७ : २१; मार ४०५ : ५.
 फेन-तरङ्गा(ङ्ग-आ)दि– -दि आद
१०, ६.
 फेन-प[m]– -पाः आश्र ३.
फः, फां, फीं, फूं, फैं व ४३२:१६[n].

फ्रों[n] व ४२८: ९.
फ्रौं[n] व ४३२: १.

## ब

बं[n] आप ३०६: १; व ४३७: २३;
 हंयो ११.
 बं-कार– -रः अक्ष ५.
१बक[o]– -कः छां १,२,१३;१२,१;३.
२बक[p]– -कः क्रु १४.
३बक[q]–
 बक-मूषिक– -कम् बृजा ४, ६.
बकुल[r]– -लैः काम २४.
 बकुल-वन– -नम् सार २२१:१२.
 बकुल-वृक्ष– -क्षाणाम् सार २३३:
 १४.
बग(ल>)ला[s]– -ला व १९; पी
 ४२२ : ८.
 बगला(ला-आ)दि–षोडशा-
 (श–अ)युग(त>)ता– -ताः
 पी ४२२ : १५?[t].
 बगला-मु(ख>)खी– -खि व
 ४३६ : १३; ४५४ : १९.
बटु– वटु– द्र.
बडवा– वडवा– द्र.
बडिश[u]–
 बडिश-पि(ण्डक>)ण्डिका– -का
 महा ३,४६; या २,१२.
ब(<>व[v])त[m] क १,२,९; ऐ २,३; छां १,
 १०,६;२,१,३[v];८,८,५; बृ २,४,
 ४; ६,४,२८[v]; मुना ३, ५; भव
 १, २५; गी १, ४५.
१बदर[w]–
 बदरी–
 बदरि-(क>)का–
 बदरिका(का-आ)श्रम-
 क्षेत्र[x]– -त्रम् म ४८ : १८.

a) द्रस.। b) समस.>षस.>तुस.। c) गपू. (पृ १६९) √ई>ईयते इत्यत्र यनि.शोधः द्र.। d) °भा° इति अब्धा.। e) °विमम् इति आन.,अब्धा.। f) ऋ १०,९७,१५। g) विप.। अर्थः व्यु.च ?। h) 'कलाम्' इति अब्धा.। i) व्यु.?। j) व्यु.? =भाल–। k) =शब्दानुकृति–। वैप१ द्र.। m) =वानप्रस्थविशेष–। n) =बीजमन्त्रविशेष–। o) व्यु.? =ऋषिविशेष–। वक– इति Jc.। p) व्यु.? =राक्षसविशेष–। q) व्यु.? =जलचरविशेष–। r) व्यु.? =वृक्षविशेष–। s) व्यु.? =देवीविशेष–। t) बका° इति पा.? यनि.शोधः द्र.। u) व्यु.?=मत्स्यवेधन–। v) प्रादेशिकोच्चारणभेदमात्रत्वेन निर्देशः।

बदरी-फल-मात्र— -त्रम् रुजा १,७.

२बदर[a]— -राणि शि ६,२०.

३बदर[b]—

बादरायण[c]— -णः ब्रसू १,३,२६; ३३; ३,२,४१;४,१;१९;४,३, १५;४,७;१२;-णस्य ब्रसू३,४,८

बादरि[c]— -रिः ब्रसू १, २,३०; ३, १,११; ४,३,७;४,१०.

बधिर[d]— -रः ध्या९३,१;१योत७७; नाप३,१;६२;६७;१संन्या२,३; मृ १०;-राः क्षां५,१,१०; बृ ६, १,१०;नृउ६,४;-रान् कौ ३,३.

बाधिर्य— -र्यम् महा ४,२६.

बधिर-वत् अना १५[e].

बधिरो(र-उ)न्मत्त-मूक—

बधिरोन्मत्तमूक-वत् नाप४,२२

बभ्योग[b]—

बाभ्योग[f]— -गः, -गात् बृ ६,५,३.

√बन्ध्,>बन्धि,बध्नाति ध्या ७७; योचू५०; सांसू३,७३;सांका६३; गी १४,६; बध्नासि अज४,७५; बध्नामि प्रा १, ३६[f]; व ४३६ : १०[४]-१२[४]; १३[१]; बध्नातु व ४३८:१२;२२; ४३९:९;१९; ४४० : ६; १६; ४४१:४;१४; ४४२:२; १३;२३; ४४३:१०; बध्नीत नृपू ५,१०; बृजा ६,१२; रुजा ३,१; शि ६,१४७; बध्नी-यात् छां १,७,७; शि ६,१४०. बबन्ध शु ११.

बध्यते श्वे १,८[g]; क्षु २४;२५; ध्या ८२; नाप ५, ७; ९,७; योचू ८४[२]; पै ४, २०; महा ४, ७२; १२४; १२६; ५, ८७; १संन्या २, ९८; वरा २, २८; ४४; शि ७, ११४; मांका ६९; गी ४,१४; बध्येत वरा २, १७.

बन्धयामि व ४३४ २१;४३५: १; ४४४ : ५; १५; ४४५ : २; १३; २३; ४४६ : १२; २२; ४४७ : १०; २१; ४४८ : ९; २०; ४६६ : ४; बन्धय-बन्धय लां २१६ : २[१]; ३;५;१३; १५, १६; बपं ३१२ : ६; व ४२७ : २१[२]-२३[१];४२८:१[२]-३[१]; ४-६; ९; ११; १३; १४; १६; १८; २०;२२;४२९:१;३;५;४३४: १७; १९; ४३८ : १३; २३; ४३९:१०;२०;४४० : ७;१८; ४४१ : ५;१६; ४४२ : ३;१४; ४४३:१;१२; ४४९:१६;२३; ४५० : ७;१४;२१; ४५१ : ७; १४:२१; ४५२ : ६;१४, २२; बन्धयेत् ब्रवि ७५; योशि ५, ३८; ३९.

बद्ध,द्धा— -द्धः गी २,३२; मैत्रि ६, ३०[h]; मना २, १२, २६[i]; नाद ४३; ते ६, ८३; आबो ९[j], स्क ६;७; महा २,७०;४,४८;६४; अज ५,६८; १०५; १आ ३१; १अव ८; त्रिता ५,१०; वरा २, ३१; ७८; ७९[k]; मु २,२,६८[l]; शी ५३ : १६६[i]; सूता १, ४१; माउ १, २२; शि १, १८; ७, १०४; अवि १०; -द्धम् मे ४,२; मैत्रि ४, २; द १८; योशि १, १६०; वरा २,७८; मु २,२,१६; लिं ३१० : २६[m]; शि ६,१४६[२]; -द्धस्य पाब्र २,३१[n]; सांसू १,७; -द्धा ध्या ८५; योचू ५८; महा ६,५०; -द्धाः महा ४,११३; गी १६,१२. -ऽद्धान् मना २,७३; पा २१; -द्धानि शि ६, १०३; -द्धे ते ६,८२; शां १,७,३३. पा ५, ११.

बद्ध-भव— -भवात् त्रिता ४ ,१२.

बद्ध-पद्मा(द्म-आ)सन— -नः योचू ९५; १०६; शां १,७,१; अज ३, ४; -नम् त्रिमा २, ४०; यो १,२३

बद्ध-पीठ— -ठम् महा २,२६.

बद्ध-मुक— -कः महा ५, ७४[o]

बद्ध-शि(खा>)ख— -खः आत्र २.

बद्धा(द्ध-अ)ञ्जलि— -लिः मार २५७ : २२.

बद्धो(द्ध-उ)भय-त(ट>)टी— -टी सार २५८ : २१.

बद्ध्वा अना १९; कौ १, १६[p]; ध्या ६९; त्रिमा २, ४५; योचू ४०; क्षां १, ३, ८; योशि १, ७०; त्रिता ३,१९; यो १,१०; जाद ३,७.

बध्नत्— -ध्नन् त्रिमा २,११६.

१बन्ध— -न्धः ससा १, १; ५; नि ९; ३४; ३५; ३६[r]-४०[r]; ते ४, १३[r]; २२[r]; ५, ४४; आबो १९; त्रिवि ५, ४; पै २, ५२; महा २,४१; ४,१२६; ५, ९७; ११२; ६, ७७; अज २, १८; २४;२५; वरा २,२४; ५, ७[r]; मु२,१,१; मार २९१:१२; १४; मृ ११; सांसू ३, २४; ४, २६; ६,१६; सांका ४४; -न्धम् ते ५, ९०; १०१; पै २, ५१;

a) पा ४,३,१६३ । b) व्यु.? =गोत्रप्रवर्तक-ऋषिविशेष- । c) =आचार्यविशेष- । d) व्यु.? । e) 'अकर्ण-वत्' इति मान. । f) 'आ···बध्नामि' इति पै १३, ११, १० । g) बु° इति शांदी, प्रमृ., JC. । h) बबध° इति सात. । i) ऋ ४,५८,३ । j) 'बुद्धः' इति मञ्जा. । k) 'बन्धः' इति मञ्जा. संटि. । l) 'बन्धः' इति मिसा. संटि. । m) ऋ ६,७४,३ । n) 'बन्धस्य' इति मञ्जा. संटि. । o) ऋ १०, ७३, ११ । p) बध्य° इति मञ्जा. । q) पा.? बध्नन्- > -ध्ना इति मिसा. शोधः द्र. (तु. सांख्या ३, १; मान., मञ्जा., वे.) । r) °न्धम् इति मञ्जा. ।

बन्धूक[a]-
बन्धूक-पुष्प-द्युति- -तिम् बधु५६ : २२.
बन्धूक-पुष्प-वर्ण- -र्णम् ध्या ९३, १२.
बन्धूक-संनिभ- -भम् ध्या ९६.
बभस- √भस् द्र.
बभूवुषी- √भू द्र.
१बभ्रु[b]-
२बभ्रु[c]- -भ्रुः नी १,९§[d];३,३§[e]; -भ्रुणा नी ३, ५.
बभ्रु-कर्ण- -र्णः नी ३,२§[e].
३बभ्रु[f]-
बाभ्रव- -वः, -वात् बृ २,६,३;४, ६, ३.
बंभ्रम्यमाण- √भ्रम् द्र.
बर्कु[g]- -र्कुः बृ ४, १, ४[h].
बर्बर[i]- -राः आर्ष ८ : १५.
बर्ह[j]-
१बर्हा(र्ह-आ)पीड[k]-
बर्हापीडा(ड-अ)भिराम- -माय गोपू ३७.
२बर्हा(र्ह-आ)पीड[l]- -डः सार २४५ : ११.
बर्हिस्[m]- -र्हिः क्षां ५,१८,२; बृ ६, ४, ३; मना २, ८०§[n]; -र्हिषि २प्र ३३ : १६; ३६ : २२§[o].
१बल[m]- -लम् के क्षां[1]§[p]; ते१,२,१; ३,१०,२;क्षां क्षां[2]§[p];२,२२,५; ७,८,१[1];२[1];२६,१; बृ ५,१४, ४[2]; आरु क्षां[1]§[p]; मना२,१५§[q]; ३५§[r]; ५१§[s]; ७२§[t]; ७९§[u]; मैत्रे क्षां[1]§[p]; ब्र २; नृउ ३,१०; १योत ५८; नाप४,३८[1];§[v];योचू वा महा क्षां[1]§[p]; १संन्या क्षां[1]§[p]; २,६; अव्य कुं सावि रजा जाद जाबा क्षां[1]§[p]; कृ १२, वरा ५, ३९; पा १०,५; सार २९१:१; सु २९४ : ३; शि ५,२; हे ११; गा १३; गी १, १०[1]; ७, ११; १६, १८; १८,५३; -लस्य क्षां ७, ८,२; -लात् क्षां ७, ८, २[1]; ९,१; ते १,४०; शां १,८; महा ३,१४; योशि १, १०४; १२५; ४, ११; अन्न ४, २५; ७४; ५, ४२; मो १,४२;६३; जाद ७,२; गी ३,३६; -लानि योसू ३,२४; -ले बृ ५,१४,४; शां १,७,५२; गा १३; -लेन क्षां ७,८,१[1]; मना २,७९§[u]; नाप४,३८§[w];२संन्या १७ : ५§[x]; २शिसं २३; हे ४; -लेषु योसू ३,२५.
२बल[y]- -लाय मना २, १८§[z]; त्रिवि ७, ४६; पा ८, १०.
बलिष्ठ- -ष्ठः ते २,८,१.
बलीयस्- -यः प्रसू ३,३, ४४, -यांसः शौ ५२ : १७; ५३ : ४; -यांसम् बृ १,४,१४.
§[a']बल-दा- -दाः नृपू २, १६; २शिसं ३४.
बल-देव- -वाय व ४६० : ८§[b'].
बल-प्रमथन- -नाय मना २,१८§[z].
बल-वत्- -वत् क्षां २, २२,१; भव १,४९;गी६,३४; -वताम् गी७, ११; -वत्सु महा ४,३४; -वन्तः छां २, २२, ५; सुना १, २०, -वान् क्षां७,८,१,त्रिमा२,१०३; १४०; शि ३, ११; गी १६, १४.
बल-राम[c']- -मौ रार ५, १२.
बल-विकरण- -णाय मना २,१८§[z].
बल-हीन- -नेन मुं ३,२,४.
बला(ल-आ)रोग्य-विवर्धन- -नम् गोच ६८ : १५.
बलिन्- -लिनाम् हे ११; -ली छां ७,८,१; ह १२ : १५.
बलो(ल-उ)द्वि(त>)ता- -ता महा ४, ६२.
३बल[d']-
बल-मुख- -०खः लां २१६ : १३.
४बल[e']-
बला[f']- -०ले मावि १०[1].
बला(ला-अ)तिबला- -लयोः मावि १०.
बलातिबला(ला-अ)न्त- -न्ती मावि १०.
बलग- वलग- द्र.
१बला(क[g']>)का[h']-
बालाकि[i']- -किः कौ४,१-१०;१८[1]. -०के कौ ४,१८[1][?];१९.
बालाक्या(कि-आ)दि- -दिभिः सौ १, ३[b'].
२बला(क>)का[j']- -का कालि ४०१ : १०.
बलि[k']- -लयः क्षां५,१४,१; -लिः द १;१५;-लिम् प्र२,७;ते१,५,३;

a) व्यु.? =वृक्षविशेष-। b) =वर्णविशेष-। वैप१ द्र.। c) =वर्णविशेषवत्-। d) मा १६,६। e) शौ ५,२३,४। f) व्यु.? =गोत्रप्रवर्तक-ऋषिविशेष-। g) व्यु.? =व्यक्तिविशेष-। h) ब° इति निसा.। i) व्यु.? साहचर्यात् =जातिविशेष-। j) व्यु.? =मयूरपिच्छ-। k) तस.। l) बस.। m) वैप१ द्र.। n) तैआ १०, ६४, १। o) ऋ ६, १६, १०। p) पाग्र ३,१५,२३। q) तैआ १०,१४,१। r) तैआआ १०, ३५। s) तैआ ३, १५, १। t) शौ १९,६०,१। u) तैआ १०,६३,१। v) पाग्र २,२,११। w) तैआ २,१८,१। x) शौ ७,८७,१। y) विप. =बलवत्-। z) तैआ १०,४४,१। a') ऋ १०,१२१,२। b') ऋ१०,८३,५। c') द्रस.। d') सर्वः व्यु. च. ? =प्राणिविशेष-?। e') व्यु.?। f') व्यु.? =देवीविशेष-। g') सकृत् प्राथमिकप्लुतौ °काइइ इति लिपिप्रकारः द्र. [तु.आन., पौतु. निसा., अव्या., शांश्रा.(१,१९), JC. अन्यथैव सन्तः तु-चोद्याः]। h') °कस्या° इति अव्या.।

शां २,२१,४;बृ६,१,११;मनार, १७'[a]; कौ२,१[1];२[1];शि२,२१[1].

बलि-देवता— -ता मा ३.

बलि-प्रदान— -नम् म १,३.

बलि-वैश्वदेव—

बलिवैश्वदेव-बलिदानो(न-उ)-पसर्पण— -णैः सार २३१:१८.

बलि-हरण— -णम् मा ३९.

बलिन्—,बलिष्ठ—,बलीयस्—१बल— द्र.

ब(<>व[b])स्ति[c]— -स्तिः शां५,१६, २[1]; १८, २.

बहिस्(>:,ड्,ष्)[c] क २, २,९;१०; बृ ३, ९,२८,१; ४, ३,१२; श्वे ३, १८; गौ २,९[d];१०[d];१४; मे ४, ५[1]; मैत्रि ५, २[1]; मा २; मना २, १३,२६[e]; अधि १,९; बृजा२,१; पाशु १,१३;२,५; नृपू५,२[f];३[g].

बाह्य[b]— -ह्यः क २, २, ११; प्र ३,८; आर्षे ९:१२; -ह्यम् प्र ३, १; बृ४,३,२१[1]; नाद ३२;३९; शां १, १[1]; अन्न ५, २८; पै ४, १२; महा२,७३;४,२४; १संन्या २,१३; जाद१,२०;६,२२;वरा ५,७२; नृप ८४:११;१३;८५: १; राधा २,५; -ह्यात् शां १,६; ७,४३; जाद ६, १२; -ह्यान् बृ २,४,७-९;४,५,८-१०; गौ २, १६; अन्न ३, ४; गौ ५, २७; -ह्यानाम् महा ५, ३२; वरा ४, ८; -ह्यानि नृप ८५ : १;५; -ह्ये यो ३,१५; योशि ६, ७७; महा ४,५१; जाद १,२२; बउ ६,७; -ह्येषु राधा २,१; भव १, २१.

बाह्य-कर्म-विनिर्मुक्त— -क्ताः शि ४, ६७.

बाह्य-चिन्ता— -न्ता शां १, ७,२०; वरा २,४४.

बाह्य-तस्(>:) ई ५; गौ२, ३८; १योत ४४; कुं ११; पी ४२२ : १४.

बाह्य-दृष्टि— -ष्ट्या अध्या'९९.

बाह्य-देवा(व-अ)भ्यर्चन— -नम् १संन्या २, ५९.

बाह्य-देवा(व-अ)र्चन— -नम् नाप ७.

बाह्य-देश— -शे सर ३,२९.

बाह्य-दोष— -षैः क२,२,११.

बाह्य-प्रणव— -वः नाप ८,१.

बाह्य-प्रतीति— -तेः सांसू १, ४२.

बाह्य-प्राण— -णस्य अना३३[i].

बाह्य-शुद्धि-नियम— -मः सांसू ५, १२१

बाह्य-मार्ग— -र्गेण यो२,४०.

बाह्य-वत् अता १०.

बाह्य-वृत्त-वीथि— -थ्याम् त्रिवि ७,४८.

बाह्य-वृत्ति— -त्तयः नाप५,१.

बाह्य-शून्य—

बाह्यशून्य-त्व— -त्वात् महा २, ५.

बाह्य-स्थ-विषय— -यम् वरा ५, ५८[j].

बाह्य-स्पर्श— -र्शेषु गी५,२१.

बाह्या(ह्य-आ)काश— -शम् जाद ८, १.

बाह्याकाश-धारण— -णम् शां १,९.

बाह्या(ह्य-आ)त्मन्— -त्मा प्रा २, १[k]; २आ १[1].

बाह्या(ह्य-अ)निल— -लम् जाद ८, २.

बाह्या(ह्य-अ)न्त— -न्ते बउ ५, ३१.

बाह्या(ह्य-अ)न्तरीय— -याद् बउ ३, १४.

बाह्या(ह्य-अ)भ्यन्तर(>:)

बाह्याभ्यन्तः-करण— -णानाम् मा २८; २९.

बाह्या(ह्य-अ)भ्यन्तर्-कक्ष्य— -क्ष्यम् मं २, १, ३.

बाह्या(ह्य-अ)भ्यन्तर— -रयोः सांसू १, २८; -राभ्याम् सांसू १, ६३; -रे प्रवि ३५.

बाह्याभ्यन्तर-विषया-(य-आ)क्षेपिन्— -पी योसू२,५१.

बाह्याभ्यन्तर-वीक्षण— -णात् नृउ ९, ११.

बाह्याभ्यन्तर-स्तम्भ-वृत्ति— -त्तिः योसू २, ५०.

बाह्याभ्यन्तर-स्थ-व्योम-पञ्चक— -कम् अता ७.

बाह्या(ह्य-अ)भ्यन्तर-मध्य-(म>)मा— -मासु प्र ५,६.

बाह्या(ह्य-अ)र्चन— -नम् मैत्रे २, २६.

बाह्या(ह्य-अ)र्थ-वासनो-(ना—उ)द्भू(त>)ता— -ता महा ६, ५०.

बाह्या(ह्य-अ)वष्टम्भन— -नेन मे २, २.

बहिः-पूर्ण— -र्णः मैत्रे २,२७; वरा ४, १८.

बहिः-प्र(ज्ञा>)ज्ञ— -ज्ञः मां३;नृपू४, ४;तुपा ५; राउ ३,१; बउ१,५; ५,३४; -ज्ञम् मां ७; नृपू ४,७; नाप ९,२०;राउ ३,१; विद्या १; बउ १, १२; ५,३८.

बहिर्-अङ्ग— -ङ्गम् योसू ३,८.

बहिर्-अन्तर्

बहिरन्तर्-व्यवहार— -रम् पाशु १, १५.

a) तैआआ १०,६७[1] । b) प्रादेशिकोच्चारणभेदमात्रत्वेन निर्देशः । c) =बस्ति. । वैप१ द्र. । d) वैतु. JC. बहिश्चे° इति । e) तैआ १०,११,२ । f) वैतु. JC. °हिर्वे° इति । g) वैतु. JC. °हिर्वो° इति । h) पावा ४, १,८५ । i) °प्राणः सः इति पाठ. । j) स्वान्तस्थवि° इति अध्या. । k) 'एकात्मा' इति पाठ. ।

